# गीतपीतवसनम्

[ रागकाव्यम् ]



रचयिता

श्रीश्यामरामकविः



सम्पादकः

श्रीप्रभातशास्त्री

● प्रकाशक :
देवभाषाप्रकाशनम्
दारागंज-प्रयाग:

प्रथमसंस्करणम्
संवत् २०३१ वि०
मूल्यम्—पञ्चमुद्राः

● मुद्रक:
देववाणी-मुद्रणालयः
दारागंज-प्रयाग:

# GĪTAPĪTAVASANAM

[RĀGA KĀVYAM]



By

SHRI SHYĀMARĀMĀ KAVI



Edited by

SRI PRABHĀT SHĀSTRĪ

## काव्यविषये

पाठकानां पुरतः प्रस्तुतकृतिसम्बन्धे कृतिकारविषये च किमपि कथनात् पूर्वं प्रस्तुतकृतिप्राप्तिकथाकथनमसाम्प्रतन्नात्र। बाल्यकालादेव गीतनिर्माणे गीतमयकाव्यपठने च आसीत् मदीया रुचिः। अनया मामकीनया प्रवृत्त्या परिचितेन स्वर्गीयमहामहोपाध्याय डा० उमेशमिश्र-महाभागेन एकदा कथितं 'यद् मम गृहे गीतमयमेकं लघुकायकाव्यं वरीवर्ति, भवन्तः संस्कृतभाषानिबद्धगीतप्रियाः, अतः समागत्य मद् भवने तदवलोकयन्तु। इत्युदन्तं संश्रुत्य प्रसन्नमानसोऽहं तद्गृहं गतवान्। तेन विदुषा हस्तलिखिता प्रस्तुतकृतिः प्रस्तुतीकृता मत्समक्षे। प्रपठ्य मोमुद्यमानमानसेन मया अस्य काव्यस्य प्रतिलिपिकरणाय कृता याच्ञा तं प्रति। तेन महाभागेन अनुमतिः प्रदत्ता। यथामति कृता प्रतिलिपिः। इयमेव प्रस्तुतरागकाव्यस्याऽवाप्तिकथा। प्रतिलिपिकरणसमये प्रस्तुत-काव्ये यत्र तत्र अक्षरैकस्य अक्षरद्वयस्य च त्रुटिरासीत्। तत्र यथामति-प्रसङ्गानुसारमंशपूर्तिं कारं कारं कृता प्रतिकृतिः। किन्तु यत्र महती त्रुटिरासीत् तत् स्थानं (   ) कोष्ठान्तर्गतं विधाय परित्यक्तम्।

अस्य रागकाव्यस्य रचयिता श्यामरामकविः कस्मिन् काले कस्मिन् प्रदेशे कस्मिन् जनपदे कस्मिन् ग्रामे जन्म लेभे इत्येतत् सर्वं कृतेऽपि प्रयत्ने स्पष्टप्रमाणाभावात् तमसाच्छन्नमेव दरीदृश्यते; इति संचिन्त्य चेखिद्यते चेतः। किन्तु प्रस्तुतकाव्यस्य अन्तिमसर्गस्थेन एकेन श्लोकेन एका प्रतीतिः सञ्जायते यदस्य कविवरस्य तत्र भवतः पितुर्मातुश्च नाम

क्रमशः दशरथः अन्नपूर्णा च आसीत्।[१] एतस्मादधिकं कवि-विषयकं वृत्तजातं कृतेष्वपि शतप्रयत्नेषु नैवोपलब्धम्। दुर्भाग्यस्यायं विषयो यदस्य कविवरस्य चर्चा अप्रसिद्धानां कवीनां तथा संस्कृत-वाङ्मयस्य विभिन्नविषयलेखकानां परिचयप्रदायके परमप्रसिद्धे आफ्रेक्ट महाभागानां 'केटलागस् केटलागारम्' नामके ग्रन्थेऽपि न प्राप्यते। समासेन संस्तवोल्लेखस्य तु कथैवापास्ता।

स्वरताललयबद्धं रागकाव्यमिदं दशसर्गात्मकं वरीवर्ति। सर्वेऽपि सर्गाः प्रायः अल्पकायाः वर्तन्ते। कथासंयोजनकृते गीतप्रणयनानन्तरं मध्ये मध्ये सरसश्लोकानां संरचना कृता। काव्येषु श्रृंगाररसस्य प्राधान्यं वर्तते। कविवरेण पीयूषवर्षिमहाकविजयदेवस्य गीतगोविन्दकाव्यात् प्रेरणामवाप्य विहिता चाऽस्य सरसकाव्यस्य निर्मितिः। काव्येऽस्मिन् भगवतः श्रीकृष्णस्य तथा राधायाः पवित्रं चरित्रं वर्णितमस्ति। भाषा चास्य कोमला सरला प्रसादगुणमण्डिता सहृदयहृदयाह्लादिका च वर्तते। काव्यमिदं कविवरेण किमर्थं विरचितमेतत् सर्वं काव्यारम्भे प्रतिपादितम्—

हरिस्मरणसादरं यदि मनो मनोजन्मनः,
कलासु विमलासु चेत् किल कुतूहलं वर्त्तते।
तदानुपदमुल्लसन्मधुरिमैकधुर्य्या बुधाः!
सुधारससमां रसैः श्रृणुत मामकीं भारतीम्॥

प्रथमसर्गः, पृष्ठम् १।

कमनीयां कलां प्रति कुतूहलशालिनः बुधाः पाठकाः भगवत्स्मरणेन साकं काव्याध्ययनस्यापि आनन्दमनुभवन्तु—एतदर्थमेव रमणीमिव रमणीयां

---

१—माता यस्य धराधरेन्द्रतनयातुल्याऽन्नपूर्णा कृती,
तातो यस्य महाशयो दशरथो निष्ठावशिष्ठाऽधिकः।
राधामाधवकेलिकौशलकथां कान्तां कवीनां मुदे,
काव्यं भव्यमिदं चकार स नवं श्रीश्यामरामः कविः॥

दशमसर्गः, पृष्ठम् ३६।

स्वकीयां भारतीं सुधारससमानां मन्यमानेन कविवरेण भक्तिभावनाभृतिः गीतपीतवसननामिका कृतिः कृता। एतत्प्रसङ्गे कविनोल्लिखितस्यैकस्य श्लोकस्य ऐतिहासिकं महत्त्वमपि वरीवर्त्ति। तद् यथा—

गीतं बुधैर्य्यदि सुधासममेव पीतं,
श्रीकालिदासजयदेवकविप्रणीतम्।
ताम्बूलतुल्यमपि ते मम मानयन्तु,
श्रीगीतपीतवसनं मदनुग्रहेण॥

प्रथमसर्गः पृष्ठम् २।

पद्येऽस्मिन् कविना जयदेवात् पूर्वं कविकालिदासप्रणीतस्य गीतकाव्यस्य चर्चा स्पष्टरूपेण कृता। एतेन इत्यनुमीयते यत् कालिदासेन गीतकाव्यस्य रचना निश्चप्रचं विहिता। प्रस्तुतकृतिकारश्रीश्यामरामकविना तस्य काव्यस्य अवलोकनमध्ययनञ्चापि विहितमित्यत्र नास्ति सन्देहलवः। अन्यथा अनधीतस्य कविकालिदासप्रणीतस्य गीतमयकाव्यस्य चर्चायाः का आवश्यकता। अद्यावधिप्रसिद्धमहाकविकालिदासप्रणीतस्य गीतमयकाव्यस्य प्राप्तिस्तु न सञ्जाता। तेन प्रतीयते समालोचकाचार्येण महाकविराजशेखरेण चर्चितेषु कालिदासत्रयेषु[1] प्रसिद्धात् रघुवंशादिमहाकाव्यलेखकात् कालिदासादन्यः कालिदासः गीतमयकाव्यस्य रचनांविहितवान्; प्रस्तुतकाव्यरचयिता श्यामकविश्च तदधीतवान्। सांप्रतं तत् काव्यं न संप्राप्यते, कालकवलितञ्चेति मन्यामहे। इति कृत्वा अस्य श्लोकस्य संस्कृतसाहित्यजगति ऐतिहासिकं महत्त्वं वर्त्ततेतराम्।

संस्कृतभाषाया बहवः कविगणाः गर्वोक्तिकथनचणाः आसन्। तेषु

---

१—एकोऽपि जीयते हन्त! कालिदासो न केनचित्।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु॥
राजशेखरस्य

राजशेखरपण्डितराजजगन्नाथप्रभृतीनां[१] गर्वोक्तयः संस्कृतजगति परमप्रसिद्धाः। प्रस्तुतरागकाव्यकर्ता श्यामरामकविः अनया गर्वोक्तिलेखनपद्धत्या सर्वथा अप्रभावितः। प्रत्युत एतद्विपरीतं कविरयं 'विद्याविनयेन शोभते' इत्याभाणकस्य मूर्तिमान् अवतार इव दरीदृश्यते। स्वकीयविनयशीलता कविवरेण काव्यान्ते प्रकटीकृता—

नाऽऽस्ते वाचि विदग्धता यदिह मे काव्ये न भव्या गिरो,
न शृङ्गाररसस्य वा चतुरता रीतिर्नवाऽऽस्ते नवा।
श्रीगोविन्दपदारविन्दयुगलध्यानावनद्धात्मन-
स्तत्सर्वं हि ममापराधमधुना शुद्धाः क्षमध्वं बुधाः ! ॥

दशमसर्गः, पृष्ठम् ३६।

अस्य कविवरस्य कृतौ काव्यविषयिणी विदग्धता नूत्ना रीतिश्च नैव राजते। केवलं श्रीगोविन्दपदारविन्दयुगलध्यानजनिका पाठकानां कृते अमन्दानन्ददायिका शब्दावली शोभते।

काव्यस्य प्रारम्भः कविनाऽधिवृन्दावनं वसन्ते समायाते सति निकुञ्जे

---

१— वभूव वल्मीकभवः कविः पुरा,
ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया,
स वर्तते सं प्रति राजशेखरः।

राजशेखरस्य

आकूलाद् रत्नसानोर्मलयवलयितादा च कूलात् पयोधे-
र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजाम्-
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः॥

कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः।
नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः।

पण्डितराजजगन्नाथस्य

भ्रमरनिकुरम्बेषु गुञ्जत्सु सत्सुवसन्तरागे मनोहरेण वसन्तवर्णनेन सह कृत:--

मधुरिपुरिह विहरति मधुमासे ।
माधविकासुमधुरमधुमादितमधुकरनिकरविलासे ॥
ध्रुवपदम् ।
सुललितवञ्जुलकुसुमपरागपरागितमधुकरपुञ्जे ।
कुसुमितकुन्दविदलवकुलावलिसुरभितमञ्जुनिकुञ्जे ॥१
नवमलयजवनघनपरिरम्भणसुरभिपवनशुचिगन्धे ।
प्रियविरहानलविकलवधूजनगञ्जनमबलनिवन्धे ॥२
सरसरसालकुसुमरसतुन्दिलनवकोकिलकलरावे ।
मदनविनोदसमोदवधूजनविरचितबहुविधभावे ॥३
अतिनववरुणतरुणकरुणागुरुकिंशुकललितपलाशे ।
कुसुमितकाननपुञ्जमञ्जुरण (रञ्जितन) वकमलाशे ॥४
तरुणतमालविमलनवदलरुचितुलितनरकरिपुशोभे
मनसिजविशिखदूनयुवजनविरचितयुवतीजनलोभे ॥७

प्रथमसर्ग:, पृष्ठम् ४१ ।

एतादृशेन सुन्दरेण भावनाभरेण प्रकृतिचित्रणपरेण कोमलपदावलिवलितेन ललितेन मधुरपदबन्धनिबद्धेन स्फीतेन गीतेन रञ्जितं रम्यं भव्यं प्रस्तुतं रागकाव्यं राजतेतराम् । वसन्तवर्णनात्मकस्याऽस्य रागोऽपि वसन्तः । स्वर्णे सुगन्धयोग: । अत्र ध्रुवपदं विहाय सप्तपदानि एव वर्तन्ते । काव्येऽस्मिन् कविना सकलेषु गीतेषु सप्तपदानामेव संसृष्टि: विहिता । परम्पराऽनुसारेण—अष्टपदानामेव संसृष्टिः समीचीना । महाकविजयदेवस्य प्रत्येकगीते पदाष्टकं प्राप्यते । अस्मात् कारणादेव सकलेऽपि सुधीसमाजे गीतगोविन्दस्य प्रत्येकगीतकृते अष्टपदीति संज्ञाऽस्ति । अस्यां दशायां प्रस्तुतरागकाव्यगीतस्य कृते सप्तपदी इति नामकरणन्नासमीचीनम् । अयमाशय:—अष्टपदीति संज्ञा बोधकगीतिस्तु

'गीतपीतवसने' स्वल्पः एव प्राप्यते । प्राधान्यं बाहुल्यञ्चाऽस्मिन् रागकाव्ये सप्तपदात्मकगीतस्यैव दृश्यते । अस्तु, प्रकृतमनुसरामः ।

काव्येऽस्मिन् सहृदयहृदयहारिणः काव्यमाधुर्यधारिणः पाठकानां हृदयस्य पठनसमय एव सरलतरलकारिणः बहवः गीतनिवहाः राजन्ते ।

माधवस्य वियोगे कामबाणेन नितरां दन्दह्यमाना राधा भ्रमति विलपति विषीदति रोदिति अथ च शीतलसुगन्धिनं मलयाऽनिलमपि विषमिव कलयति सा--पृच्छति च स्वसखीं --'स्मरति न मामपि वत वनमाली' । एतादृशं गीतं प्रपठ्य आनन्दमनुभवन्तु नाम अध्येतारः—

माधव! बहु विलपति तव राधा ।
मदनविशिखचयविरचितबाधा ॥
चटुलपटीरसुरभिमतिधीरं ।
कलयति विषमिव मलयसमीरम् ॥
नयनसलिलकणकलिलनिचोलम् ।
वहति विरहसितमपि च कपोलम् ॥
स्तिमितचलितविनिमीलितनयनम् ।
श्रयति च नवनलिनीदलशयनम् ॥
नवमलयजरसमपि मृगनाभिम् ।
गणयति विधुमपि गरलसनाभिम् ॥
मामपि वदति समदमिति विविधम् ।
हरिमनुनय सखि ! नय मम सविधम् ॥
निगदति विरचितकरुणविरचनम् ।
हरिहरिहरिरिति हरिरिति वचनम् ॥

**चतुर्थसर्गः, पृष्ठम १७ ।**

अत्र कविना राधायाः विरहजनितभावनायाः प्रकटीकरणाय अलङ्कृत भाषायाः प्रयोगो नैव विहितः । विरहिण्याः राधायाः तादृशीमानस-भावनाऽभिव्यक्तये प्रसादगुणपूर्णभाषा प्रयुक्ता । तेन पठनसमय एव पाठकः भावविह्वलो भवति ।

विज्ञानां काव्यमर्मज्ञानां मते सद्यः भावविह्वलीकरणक्षमतासहिता कविता एव उत्कृष्टकाव्यकोटौ परिगण्यते। एतद्रहिता केवलसमासबहुलशब्दपटलमात्रेण संवलिता कविता तु अधमकाव्यकोटौ स्वीक्रियते। उत्कृष्टकाव्यनिर्माणनिपुणाः सिद्धसारस्वताः जनसमाजे समादरणीयाः कविगणाः अङ्गुलिगणनीयाः एव भवन्ति।

इत्थमलं प्रतिपलं 'हरिहरिहरिहरिरिति' विलपनशीलं राधिकया संगीतं गीतमुपरि चर्चितं वसन्तरागे ग्रथितं महितं वसन्तवर्णनञ्च पठितं पाठकैः। सम्प्रति विरहविधुराया राधायाः भवति च यत्र प्रतिक्षणं रसचर्वणमेतादृशं मर्मस्पर्शिविरहवर्णनमपि पठ्यताम् यथा—

किं करवाणि विधुरा।
विरमति मधुरजनी मधुरा॥
ध्रुवपदम्

दहति विरहदहनो मम देहम्।
सखि! कलयामि विपिनमिव गेहम्॥
वहति मलयमरुदहह!! निकामम्।
बोधयतीव शयितमपि कामम्॥
बलति वरुणदिशि शशधरबिम्बम्।
हरिरधुनाऽपि करोति विलम्बम्॥
व्यथयति मामयमपि हिमधामा।
रमयति हरिमिह काऽपि सकामा॥
स्मरति न मामपि वत वनमाली।
जीवति न खलु कुसुमशरशाली॥
कमपि विहितमति गुरु किमु पापम्।
प्रियदर्शनमपि येन दुरापम्॥
किमिह वृथा विलपामि सखेदम्।
जीवनमपि वरमिह न ममेदम्॥

सप्तमसर्गः, षष्ठम्। २६-२७।

गीतेऽस्मिन् कविना समासपूर्णपदानां प्रयोगो न विहित.। अथ च विरहभावनाव्यक्तीकरणाय विरमति, दहति, वहति, वलति, स्मरति प्रभृतीनां प्रसङ्गानुकूलभावोद्बोधिकानां क्रियाणां प्रयोगः कृतः। अनेन कारणेन गीतपठनसमय एव भावजगति विचरणशीलाः पाठकाः मोमुह्यमानमानसाः भवन्ति। अयमेव कविप्रतिभायाः पटिमा अस्य गीतस्य गरिमा महिमा च। कथनस्याऽयमाशयः यदस्मिन् गीतेऽपि सहृदयानां पाठकानां हृत्तलस्य तरलीकरणक्षमता दन्ध्वन्यते। गीतपोतवसनस्य समस्तेषु गीतेषु महाकविजयदेवस्य गीतेष्विव गीतस्याऽन्तिमपदे कवेर्नाम न प्राप्यते। एतद्विपरीता स्थितिस्तु इयमस्ति यदद्यावधि प्रकाशितेषु समस्तेषु रागकाव्यषु गीतान्ते कवेर्नामप्रयोगस्य परम्परा दृश्यते।

अस्मिन् रागकाव्ये कथासंयोजनकृते गीतानां मध्ये मध्ये विभिन्नवृत्तेषु निर्मिताः काव्यसौन्दर्यभृताः सरसाः श्लोकाः अपि सन्ति। श्लोकेषु कविवरेण संस्कृतकाव्यजगति प्रसिद्धानां मात्रिकवर्णिकवृत्तानामेव प्रयोगो विहितः। अप्रसिद्धेषु वृत्तेष्वेकस्मिन् स्थले नर्दटकवृत्तस्य प्रयोगः प्राप्यते काव्येऽस्मिन्। एतेन इत्यनुमीमहे यदयं कविवरः सरसमधुरतरगीतनिर्माणवद् विभिन्नवृत्तेषु श्लोकनिर्माणेऽपि निपुणः आसीत्। तेषु कतिपयश्लोकाः अध्येतॄणां मनोविनोदायाऽत्र उद्ध्रियन्ते। आकाशे आखण्डलदिशि अखिलं जगद् श्रमश्रान्तं कुर्वन् तमस्तोमं विघटयन् सोमः उदेति। श्रीश्यामरामकविः तस्य वर्णनं कठिनोत्प्रेक्षया गर्भितेन कल्पनाकलितेन वृत्तजातेन विदधाति। यथा --

वलति विमलरङ्कुश्यामलाङ्कः शुचिश्री--
विदलकुमुदवृन्दाऽऽनन्दनोऽमन्दमिन्दुः।
हरिहरिदबलायाः केशवेशस्समन्ता-
द्वलयित इव दाम्नाऽमन्दकुन्दावलीनाम्॥

स्फुरति सुरवराऽऽशासारसस्यालिकेऽसौ,
तिलक इव कलावान् कल्पतश्चन्दनेन॥

असितमृगमिषेणाप्यत्र मध्येऽतिशुद्धे,
मृदुलमृगमदानां बिन्दवोऽमी वसन्ति ॥

वलति वलभिदाशासुन्दरी कुन्दवृन्द—
प्रतिरचितमिवेन्दुः कन्दुकं सुन्दरश्रीः ।
यदिह मृगमिषेणापीदमापीय मन्दं,
निवसति मकरन्दं वृन्दमिन्दिन्दिराणाम् ॥

सप्तमसर्गः, पृष्ठम् २४-२५

अत्र कविः सौन्दर्यमन्दिरस्य चन्दिरस्य स्वरूपवर्णनसन्दर्भे 'विमलरङ्कुश्यामलाङ्कः' इति पदावलेः प्रयोगं विधाय दिशानायिकायाः क्रीडनार्थं निशानाथस्य इन्दोःतुलनां कोमलेन कुन्दकुसुमर्निर्मितेन कन्दुकेन सह परिकल्प्य पण्डितानां पुरतः प्रकटयति स्वकीयप्रतिभापाटवं स्मारयति च वक्रोक्तिमिश्रितां नैषधकारश्रीहर्षस्य मनोमुग्धकारिणीं कविताकामिनीम् ।

अस्मिन् रागकाव्ये एतादृशाः भावभृताः काव्यसौन्दर्यधृताः अनेकेः अपरेऽपि श्लोकाः वर्तन्ते । तेषु श्लोकसमूहेषु शब्दशास्त्रवैदुष्यपरिचायकक्रियाविलसितैकस्य श्लोकस्य आस्वादोऽनुभूयताम्—

समीर इह मालयः किल कृतान्तदूतायते,
विधुश्च गरलायते मनसिजः कृतान्तायते ।
तदत्र विरहव्यथाव्यसनसन्निपातेऽथ सा,
रथाङ्गधर ! सर्वथा कुरु तथा यथा प्राणिति !

चतुर्थसर्गः, पृष्ठम् १६।

रूपकालङ्कारगर्भितस्यैकस्याऽन्यस्याऽपि श्लोकस्य रसास्वादो विधीयताम् ।

तद्भ्रूयुग्मं कठिनधनुषी मार्गणास्तत्कटाक्षा.
उच्चैर्नासा वलति नलिकं केशपाशोऽपि पाशः ।

अस्त्राण्येतान्यहह !! मदनाऽऽयासकारीणि तस्याः,
शङ्के पङ्केरुहनयनया निर्जितोऽभून्मनोभूः ॥

तृतीयसर्गः, पृष्ठम् १४।

सुन्दरसूक्तिरञ्जितस्य रसिकजनमोहकस्यैकस्यान्यस्याऽपि श्लोकस्य भावनाभिः संस्तवः प्राप्यताम् +

काञ्चीदामरसाद्विराममगमन्निश्वासकोष्णं मखं,
निष्पन्दं नयनं च्युता विरचिताः कस्तूरिकापत्रिकाः।
कान्ता प्रीतिमवाप कामपि तथाप्याहो !! रहोरम्भिता,
वामानां किल कामकुञ्चितधियां वामैव रीतिः परम् ॥

दशमसर्गः पृष्ठम् ३४।

श्लोकेऽस्मिन् श्यामरामकविना कामशास्त्रसिद्धान्ताऽनुसारेण विपरीत-रतिवर्णनं विहितम्। परं भगवद्विषयकत्वात् तन्न मह्यं रोचते। अत्र विषये निवेदनमस्ति—प्रकाशितेष्वप्रकाशितेषु स्वरताललयबद्धेषु प्रायः सर्वेषु रागकाव्येषु आचार्यवात्स्यायनप्रणीतकामसूत्रचर्चितकामशास्त्रीय-सिद्धान्तानां पारिभाषिकशब्दावलीनाञ्च प्रयोगः निश्चप्रचमवाप्यते। अत एव गीतगोविन्दे महाकविजयदेवेन विलासकलासु कुतूहलशालिनां कृते एव गीतगोविन्दस्य रचना मया कृता इत्युद्घोषणा काव्यारम्भे स्पष्ट-रूपेण विहिता। अतः तदीयपरम्परायां लिखितेषु रागकाव्येषु तस्य प्रभावः कथन्न स्यात्। एतत् सर्वं मया रामगीतगोविन्दस्य भूमिकायाँ प्रतिपादितत्। अतः अस्य काव्यस्याऽपि निर्मितिः 'कान्तां राधामाधव-केलिकौशलकथां' पाठाकान् श्रावयितुमेव सञ्जाता। अस्मात् कारणादेव श्यामरामकविना विपरीतरतेः चित्रणं विहितम्। अधिकं किं ब्रूमो-वयम्। काव्येऽस्मिन् 'एकतः वसन्तवर्णनमस्ति अन्यतः गोपीपतिः युवती-निकरे नृत्यति काऽपि तं चुम्बति काऽपि तं जल्पति काऽपि तं परिरभ्य रमते' इति चित्रणमस्ति। पुनः एकस्मिन् स्थाने वृन्दावनविपिनं गतया कयाऽपि गोपिकया 'नितान्तं मधुरमुरलीवादयन्तं मुरारिं मया सह रमय' इति प्रार्थना क्रियते; अन्यत्र एवं दृश्यते—परमकुपिता राधिका

निजधाम निजगाम; तत्र तां मलयाऽनिलोऽपि दहति, तुदति, मनसिजोऽपि विषशीकरं किरति, रजनीकरमनलमिव कलयतीत्यवलोक्यते। इत्थमन्यस्मिन् स्थले राधिकाप्रेमसाधिका सखी—हे मधुसूदन! सा परितापं वहति, अनन्तगुणं भवन्तं प्रणमति इति वदति। तदनन्तरमन्यत्र हे सखि! वने वनमाली विलपति, मा कुरु विलम्बं वृन्दावनविपिनमभिसर यौवनं विफलं मा गमय इत्यस्ति। कथनस्याऽयमाशयः-काव्येऽस्मिन् सर्वत्र श्रृंगाररसस्य प्राज्यं साम्राज्यं नयनगोचरीभवति।

प्रस्तुतकृतिकारश्यामरामकविनाऽपि काव्यान्ते स्पष्टरूपेण उद्घोषितम्—

श्रृंगारसारतरमारकथासमेतं,
श्रीमन्मुकुन्दचरणस्मरणानुबन्धि।
श्रीश्यामरामरचितं मुखभूषणाय,
श्रीगीतपीतवसनं सुधियां सदास्तु॥

दशमसर्गः, पृष्ठम् ३३।

काव्येऽस्मिन् केचिन श्लोकाः कानिचिद् गीतानि च त्रुटितान्यासन्। त्रुटितगीतानां पूर्तिः मया यथामति कृता। यथासंभवं त्रुटितगीतांशस्य पूर्तिः गीतकारशैल्यामेव विहिता। श्लोकांशानां पूर्तिस्तु कारणवशान्न कृता। त्रुटितांशपूर्तिपदावली कोष्ठान्तर्गता। यथा तानि गीतान्यधो खिखितान्य वलोक्यन्ताम्—

अतिनववरुणतरुणकरुणागुरुकिंशुकललितपलाशे।
कुसुमितकाननपुञ्जमज्जुरण (रञ्जितन) वकमलाशे॥

प्रथमसर्गः, पृष्ठम् ४।

मधुरमधूकमधुरवनिताऽधरकलितिनिजाधरपानम्।
शुचिहिमरुचिरुचिराननया कृतदृढपरि (चुम्बनदानम्)॥
(कनककलितकलमेखलया) ऽबलया परिकलितदुकूलम्।
मदनविनोदरसैरनुरञ्जिततरुणतरुणतरुमूलम्॥

द्वितीयसर्गः, पृष्ठम् ६।

सुमधुरपवने रतिपतिभवने सुरभिणि मञ्जुनिकुञ्जे ।
वसति रसालरसाल(सतरुतल) विलसदधिकपिकपुञ्जे ।।

पञ्चमसर्गः, पृष्ठम् २० ।

अस्य रागकाव्यस्य संपादनसम्बन्धे समये समये सुहृद्वर्य्य-श्रीतारिणीशझामहाभागेन महती सहायता प्रदत्ता । तत्कृते विद्वद्वर्य्याय झामहोदयाय अनेकान् धन्यवादान् विदद्मो वयम् । छन्दसां सूची-निर्माणे डॉ० शिवशङ्करत्रिपाठिमहोदयेभ्यः सहायताऽधिगता । सोऽपि धन्यवादार्हः विजयतां । गोपीपतिः ।

गच्छतः स्खलनं क्वाऽपि, भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः ।।

**गणेशचतुर्थी** **१९७४** **प्रभातशास्त्री**

# क्रमः







❀ ॥ श्रीगणेशाय नमः ॥ ❀

•

# ॥ अथ गीतपीतवसनं प्रारभ्यते ॥

•

हरिस्मरणसादरं यदि मनो मनोजन्मनः,
कलासु विमलासु चेत् किल कुतूहलं वर्त्तते ।
तदानुपदमुल्लसन्मधुरिमैकधुर्य्या बुधाः !
सुधारससमा रसैः शृणुत मामकीं भारतीम् ॥१

गीतं बुधैर्य्यदि सुधासममेव पीतं,
श्रीकालिदासजयदेवकविप्रणीतम् ।
ताम्बूलतुल्यमपि ते मम मानयन्तु,
श्रीगीतपीतवसनं मदनुग्रहेण ॥२

वन्दनीयमिह नन्दनन्दनं, देवकीहृदयचारुचन्दनम् ।
श्यामरामकविना प्रणम्य तं, गीतपीतवसनं वितन्यते ॥३

## गुर्जरीरागेण गीयते

नन्दहृदयनवचन्दन ! कुलनन्दन ए !
यदुकुमुदावलिचन्द्र ! जय गोविन्द ! हरे ! ॥१

हतविबुधाधिपशासन ! भयनाशन ए !
धृतगोवर्द्धन ! धीर ! जय गोविन्द ! हरे ! ॥२

अशरशराशनदारण ! हतरावण ए !
झटिति विहिंसितकंस ! जयगोविन्द हरे ! ॥३

तातवचनहतरेणुक ! जितधेनुक ए !
दलितमहीसुतदम्भ ! जय गोविन्द ! हरे ! ॥४

ललितकपटपटुवामन ! जनपावन ! ए !
विशमितबलिसंरम्भ ! जय गोविन्द ! हरे ! ॥५

असितसरोरुहसुन्दर ! गुणमन्दिर ! ए !
अतिनन्दितयदुवृन्द ! जय गोविन्द ! हरे ! ॥६

दशरथवंशधुरन्धर ! घनबन्धुर ए !
कलितमुदितसुग्रीव ! जय गोविन्द ! हरे ! ॥७

उद्धृतविततवसुन्धर ! नतकन्धर ए !
वितर सुखं विबुधेश ! जय गोविन्द ! हरे ! ॥८

●

राधापयोधरनखक्षतदानदक्षो,
वक्षोजकुङ्कुमरसैरतिलोहितान्तः ।
व्याकोषकोकनदराजिविराजमानः,
पाणिः पुनातु विमलो मुरलीधरस्य ॥४

समायाते वृन्दावनमधिवसन्ते सहचरी-
सहस्रैः सानन्दं सह विहरमानस्य[1] रहसि ।
निकुञ्जे गुञ्जत्सु भ्रमरनिकुरम्बेषु सरसं,
विलासः कंसारेः सखि ! बहुरसोऽयं विजयते ॥५

वसन्ते कान्तानामथ विरहिणीनामतितरां,
दुरन्ते सामन्ते वितरति निजाज्ञामिति मुदा ।
पिकव्याजात् कान्ताः प्रियतममुपाश्लिष्य बहुशो-
रमन्तां कान्तारे प्रियसखि ! मुकुन्दो विहरति ॥६

●

## वसन्तरागेण गीयते

●

मधुरिपुरिह विहरति मधुमासे ।
माधविकासुमधुरमधुमादितमधुकरनिकरविलासे ॥
ध्रुवपदम् ।

---

१. विहरमाणस्येत्युचितः ।

सुललितवञ्जुलकुसुमपरागपरागितमधुकरपुञ्जे ।
कुसुमितकुन्दविदलवकुलावलिसुरभितमञ्जुनिकुञ्जे ॥१

नवमलयजवनघनपरिरम्भणसुरभिपवनशुचिगन्धे ।
प्रियविरहानलविकलवधूजनगञ्जनमबलनिबन्धे ॥२

सरसरसालकुसुमरसतुन्दिलनवकोकिलकलरावे ।
मदनविनोदसमोदवधूजनविरचितबहुविधभावे ॥३

अतिनववरुणतरुणकरुणागुरुकिंशुकललितपलाशे ।
कुसुमितकाननपुञ्जमञ्जुरण ( ) वकमलाशे ॥४

नवकुवलयनयनारतिसरभसयुवजनजनितविहारे ।
मत्तमधुपपटलीपटुतरझङ्कारमुखरसहकारे ॥५

सुरचितचम्पकचयकलिकावलिकलितमदनबलिदीपे ।
वलितमनोभवधनुरनुपमपटुगुटिकायितनवनीपे ॥६

तरुणतमालविमलनवदलरुचितुलितनरकरिपुशोभे
मनसिजविशिखदूनयुवजनविरचितयुवतीजनलोभे ॥७

*

रसालरससालसभ्रमरविभ्रमभ्राजितान्,
करम्बितपिकीपिकप्रकरकूजितैःपूजितान् ।
नयन्ति पथिकाङ्गनाः प्रियकथाभिरस्तक्षणाः,
क्षणादिह हि सव्यथाः कथमपि स्मराद्वासरान् ॥७

इह रसालरसालसकोकिलाकलरवेण रवेण बतालिनः।
अबलया वलयायितमुद्रया, विरहितस्य हि कस्य न भूयते ॥८

अभिनवकुरुविन्दसुन्दराणि,
स्फुटितमनोजकृशानुदारुणानि।
अविरलमधुना वियोगिनीनां,
विदधति शोकमशोकपल्लवानि ॥९

स्मेराम्भोरुहिणीवनीघनपरीरम्भातिसम्भावितो,
रेवावारिविसारिचारुलहरीसानन्दमान्दोलयन् ।
मन्दं मन्दमुपैति चन्दनवनीवृन्दादमन्दादरं,
नन्दावासविलासिनीजनमनोहारी वसन्तानिलः ॥१०

विदलितनवमल्लिकाऽऽदिवल्ली
बहलविलोचनचारुगन्धबन्धुः।
इह मलयतटीसमीरणोऽयं,
प्रसरति पान्थनितम्बिनीकृतान्तः ॥११

अथ रथचरणाऽऽयुधं निकुञ्जे,
स्थितमवलोक्य वधूजनस्य पुञ्जे।
मनसिजविशिखप्रवृद्धबाधां,
रहसि सखी निजगाद ( )राधाम् ॥१२

## वामकरीरागेण गीयते



मधुरिपुरिह युवतीनिकरे ।
विलसति सरसविलासपरे ॥
ध्रुवपदम्

मञ्जुलमलयजपङ्कविलेपितमधिकवलितमिदमङ्गम् ।
वहति च रमयति गोपवधूमतिबन्धुरनयनविभङ्गम् ॥१

काऽपि मनोजविनोदवशेन कुरङ्गदृगञ्चति कृष्णम् ।
चुम्बति काऽपि मुखे सुखसागरमच्युतमत्र सतृष्णम् ॥२

काऽपि निकुञ्जगुञ्जदलिपुञ्जमञ्जुतरमधुरविरावम् ।
अनुकलयति हरिणा सह दृढपरिरम्भणसमुचितभावम् ॥३

कलयति काऽपि कुतूहलकृत्रिमकोपवती करमूले ।
माधवमिह कलयन्तमलं मदनप्रमदेन दुकूले ॥४

श्लिष्यति काऽपि हरिं प्रमदा बहु विहसति काऽपि सरागम् ।
रमयति काऽपि मुकुन्दमतीव च गमयति चिरमनुरागम् ॥५

जल्पति काऽपि हरिश्रवणे युवती हृदयेशयमन्त्रम् ।
रचयति तल्पममुं रमयितुमपरा विजितस्मरतन्त्रम् ॥६

काऽपि हरिं परिरभ्य चिरं रमते रभसेन च बाला ।
गायति काऽपि मुकुन्दयशो बहुशो जितकोकिलमाला ॥७।



इह विहरति वल्लवाऽबलाभिः, सह मकरध्वजबाणविह्वलाभिः ।
मधुरिपुरधिवृन्दमिन्दुबिम्बोपमवदनो मदनोद्धरेण धन्यः ॥१३

वारं वारं कलयति मृगीलोचनानामुरोजं,
हारं हारं मधुरवचनैर्म्मानि ( )
( ) मरुचिरस्मेरवक्त्रारविन्दः,
पायं पायं मधुरमधरं नन्दति श्रीमुकुन्दः ॥१४

रमयति वनमाली मन्दमिन्दीवराक्षी—
रभिनवघनतालीमूलकान्तिर्नितान्तम् ।
मदयति मदिराक्षीकेलिसाक्षी मनोजः,
प्रसरति सरसोऽयं मालयो गन्धवाहः ॥१५

नीलेन्दीवरसुन्दरस्य मुरलीमाधुर्य्यधुर्य्योल्लस-
त्सन्धीरध्वनिधोरणीभिरचिरादेकान्तमानीतया ।
वृन्दारण्यनिकुञ्जमञ्जुभवने सार्द्धं कुरङ्गीदृशा,
मन्दं नन्दनिकेतनन्दनरहःक्रीडाकलापं स्तुमः ॥१६



इति श्रीगीतपीतवसने रमितरमाधवो
नाम प्रथमसर्गः ॥



# द्वितीयसर्गः



विलसति मधौ राधासर्वाऽनुरोधिनि माधवे,
प्रतिहतगुणोद्रेकादेका गता न चिराद्बहिः ।
मधुरिमसुधासध्रीचीनां गिरामथ वाचिका,
रहसि करुणं ह्रीणा दीना जगाद सखीजनम् ॥१



**मालवरागेण गीयते**



सखि ! हे विरचितरासविलासम् ।
स्मरति मधुरमुरलीधरमिह हि;
मनो मम सुललितहासम् ॥
ध्रुवपदम्

तरुणतमालविमलनवदलसकमलनवजलधरनीलम् ।
मदनवशीकृतनवयुवतीजनकृतमुखचुम्बनलीलम् ॥१

चटुलपटीरतिलकमभिनवपरिकलितवलितवनमालम् ।
पीतवसनरुचिविजितरुचिरनिरुचिततडिदम्बुदमालम् ॥२

वलितविलोलविलसदङ्गुलिदलश्रुतिसुखरितवेणुम्
मनुजदनुजमुनिविबुधगणस्पृहणीयचरणगतरेणुम् ॥३

अमलकमलदलविमलनयनयुगलं रभसेन सलीलम् ।
चकितचमूरुरुचिरनयनारदनच्छदखण्डनशीलम् ॥४

बहलमहारजनैररुणानि युवतिवसनानि हरन्तम् ।
तरुणतपनतनयातटभुवि सह हरिणदृशा विहरन्तम् ॥५

मधुरमधूकमधुरवनिताऽधरकलितनिजाधरपानम् ।
शुचिहिमरुचिरुचिराननया कृतदृढपरि (चुम्बनदानम्) ॥६

(कनककलितकलमेखलया) ऽबलया परिकलितदुकूलम् ।
मदनविनोदरसैरनुरञ्जिततरुणतरुणतरुमूलम् ॥७



मन्दं मन्दं मधुरमुरलीं वादयन्तं नितान्तम्,
प्रातर्वेलाकुवलयदृशां ह्लादयन्तं मनांसि ।
स्मारं स्मारं युवतिहृदये हृद्यहारं मुरारिं,
वारंवारं सखि ! मनसिजो वर्द्धते किं करोमि ॥२



## मालवरागेण गीयते

•

सखि ! हे संयुगशमितसुरारिम् ।
रतिपतिविशिखविषादितयाऽथ ;
मया सह रमय मुरारिम् ॥
ध्रुवपदम्

वृन्दावनविपिनं गतया गतमभिनवकुञ्जकुटीरम् ।
मृगमदपङ्कविलेपितया परिलेपितचटुलपटीरम् ॥१

नवनिधुवनपरिलज्जितया सुमधुरवचसा छलयन्तम् ।
शिथिलितजघनवसनलतया कुचमण्डलमाकलयन्तम् ॥२

कुसुमशयनमधिशायितया हृदये मम सुचिरशयानम् ।
चुम्बितकृष्णवदनसरसीरुहया रचिताधरपानम् ॥३

विरचितदृढपरिरम्भणया कृतदृढपरिरम्भमुदारम् ।
शिथिलितसकुसुमकुन्तलया नखलिखितपयोधरभारम् ॥४

श्रमविनिमीलितनयनसरोरुहयाऽतिपुलकितशरीरम् ।
श्रमसलिलाऽऽकुलकोमलतनुलतया कृतचीरसमीरम् ॥५

मृदुतरमधुरसुभाषितयाधिकसमुदितमुदितमनोजम् ।
मदधरशीधुरसैरनुरञ्जितसुन्दरवदनसरोजम् ॥६

सुरतरसैरतिसालसया तमनोहितरतिसुखशेषम् ।
स्तिमितनयननवखञ्जनया जनिताधररदपदरेखम् ॥७

•

क्रीडद्व्रीडितवल्लवप्रणयिनीनेत्राञ्चलैश्चञ्चलै-
स्सानन्दं सकुतूहलं सचकितं सस्मेरमुद्वीक्षितम् ।
स्मारं स्मारमपारमोहसुमहाकूपारनीरोदरे,
मज्जाम्यालि ! तमालनीलमधुना दामोदरं सुन्दरम् ॥३

शिशिरसुगन्धबन्धुमलयाऽनिलबन्धुरता-
मदकलकोकिलस्य कलहैर्विलसन्मदनाः ।
कथमथ यापयेयमधुना बलदिन्दुमती-
र्नवघनसुन्दरस्य विरहे ऋतुराजनिशाः ॥४

प्रोदञ्चन्नयनाञ्चलेन सचमत्कारं कुरङ्गीदृशा,
सस्नेहं सरसादरं सरभसं सावस्मितं विस्मितम् ।
सानन्दं समुदीक्षितो नवघनश्यामाऽभिरामाकृतिः,
कामं कामकलाकलापकुशलः कृष्णो वितृष्णोऽवतु ॥५



इति श्रीगीतपीतवसने रसाधिकराधिको
नाम द्वितीयसर्गः ॥



# तृतीयसर्गः



अथ गतासु कुरङ्गविलोचना-
स्वधिगृहाणि मुहुर्विरहार्दितः।
मधुरिपुः समचिन्तयदुच्चकैः,
स विलपन् विपिने वत राधिकाम् ॥१



**मालवरागेण गीयते**



हन्त मे दलति हृदयं चिरमसमशरबाधया।
ध्रुवपदम्

अहह !! निजगाम निजधाम किमु राधिका।
परमकुपितैव सुरतैकसुखसाधिका ॥१

वहति मलयानिलो दहति च कलेवरम्।
तुदति हृदयेशयो हृदयमपि मे परम् ॥२

विफलमिह याति ऋतुराजमधुरा निशा ।
अहमहह !! वञ्चितो हरिणरमणीदृशा ॥३

किरति मनसिजोऽपि मे मनसि विषशीकरम् ।
अनलमिव हन्त !! कलयामि रजनीकरम् ॥४

कलितबहुवेदनं वलितगिरिशारिणा ।
विफलमिह जीवनं मृगनयनया विना ॥५

किमिह विलपामि मुषितोऽस्मि विधिना चिरम् ।
हत हृदय ! नो कथं दलसि वत माऽचिरम् ॥६

हा !! हन्त ! मान्दहति निर्दयमेव कामः,
सन्तापभर्जितमथाप्यतिनिष्ठुरोऽयम् ॥१
किं वाऽचरामि विलपामि किमत्र धातः !
कुत्राऽथ यामि विरहादिह हा !! हतोऽस्मि ॥२

स्मारं स्मारं दलति हृदयं बाधते मां मनोभू-
स्तां तां चेष्टां सुरतरचनासाधिकां राधिकायाः ।
दृष्ट्वा यां यां भवति सुदृशः सन्निधाने सुधाभि-
र्दिग्धां स्निग्धां प्रमदमदनोन्मादसान्द्रो विनोदः ॥३

कटाक्षैः पद्माक्ष्याः प्रथममथ चन्द्रेण यमदिक्-
समीरेणाऽभीक्ष्णं तदनु च ततः कोकिलरवैः ।
मनो मे सन्तप्तं मनसिशय ! सन्तापयसि किं,
वृथा धिक् त्वां बाणान् धिगपि तव धिक् पौरुषमपि ॥४

इन्दुबिम्बमिदमम्बरस्थितं,
कामकुन्दकृतकन्दुकद्युति ।
मारयत्यपि च जीवयत्यपि,
स्मेरतद्वदनबन्धुरद्युति ॥५

तद्भ्रूयुग्मं कठिनधनुषी मार्गणास्तत्कटाक्षा,
उच्चैर्नासा वलति नलिकं केशपाशोऽपि पाशः ।
अस्त्राण्येतान्यहह !! मदनाऽऽयासकारीणि तस्याः,
शङ्के पङ्केरुहनयनया निर्जितोऽभून्मनोभूः ॥६

स्वैरं नाभीविवरकुहरादुत्थिता रोमराजी,
राजीवाक्ष्या वलति कुपिता काऽपि किं कालसर्पी ।
यस्मादस्या विषमविषमालोकनादेव सर्वे,
मूर्च्छामृच्छन्त्यधिकमधुना धूतधैर्य्या युवानः ॥७

इति श्रीगीतपीतवसने विधुरमधुसूदनो
नाम तृतीयसर्गः ॥



# चतुर्थसर्गः



कलकूजत्पिकीसालतमालतलमास्थितम् ।
उवाच राधिकाप्रेमसाधिका माधवं सखी ॥ १



## कार्णाटरागेण गीयते



केशव ! कलयति ! विविधविलापम् ।
सम्प्रति सा मधुसूदन ! सुदृढमहह ! वहति परितापम् ॥
ध्रुवपदम् ।

कलय निलयगरलाऽऽयुधमुखभवमिव पवमानम् ।
चन्दनवनभवनं पवनं विधुमपि चिरमनलसमानम् ॥१

गहनविरहदवदहनशमाय वहति बिसकिसलयहारम् ।
शिशिरसरसमपि विकिरति हृदि नलिनीनवदलपरिवारम् ॥२

प्रतिपलविगलितनयनकमलदलसलिलकलिलमुखचन्द्रम् ।
उषसि तुषारकलाचितविमलकमलमिव वहति सतन्द्रम् ।।३

भवदभिसरणमनोजविनोदमनोरथपुलकिशरीरा ।
रचयति सरसकुसुमशरशरनिकरैरपि शयनमधीरा ।।४

दिशि दिशि निशि शिशिरापगमीयशिशिरकरवदनमुदारम् ।
पश्यति रहसि भवन्तमहह ! विहसति विलपति सविकारम् ।।५

मृगमदरसनिचयेन चिरं मृगनाभिसनाभि शरीरम् ।
लिखति भवन्तमनन्तगुणं प्रणमति सपुलकमतिधीरम् ।।६

प्रतिपदमिदमिह वदति समदमदनस्य मदेन सशोषम् ।
कुवलयवपुषि सरुषि मनुपलगति[1] सुखदमपि वस्तु सदोषम् ।।७

•

समीर इह मालयः किल कृतान्तदूतायते,
विधुश्च गरलायते मनसिजः कृतान्तायते ।
तदत्र विरहव्यथाव्यसनसन्निपातेऽथ सा,
रथाङ्गधर! सर्वथा कुरु तथा यथा प्राणिति ।।२

•

## देशाषरागेण गीयते

•

माधव बहु ! विलपति तव राधा ।
मदनविशिखचयविरचितबाधा ।।

ध्रुवपदम्

---

१ चिन्तनीयः पाठः

चटुलपटीरसुरभिमतिधीरं ।
कलयति विषमिव मलयसमीरम् ॥१

नयनसलिलकणकलिलनिचोलम् ।
वहति विरहसितमपि च कपोलम् ॥३

स्तिमितचलितविनिमीलितनयनम् ।
श्रयति च नवनलिनीदलशयनम् ॥४

भ्रमति विषीदति रोदिति सुचिरम् ।
ध्यायति तव मुखविधुमतिरुचिरम् ॥५

नवमलयजरसमपि मृगनाभिम् ।
गणयति विधुमपि गरलसनाभिम् ॥ ६

मामपि वदति समदमिति विविधम् ।
हरिमनुनय सखि ! नय मम सविधम् ॥७

निगदति विरचितकरुणविरचनम् ।
हरिहरिहरिरिति हरिरिति वचनम् ॥८



हे नन्दनन्दन ! निशामय वाम एष,
कामस्तनौ वरतनोर्वितनोति बाधाम् ।
त्वन्देव ! वैद्यसमहृद्य ! तदद्य सद्य-
स्सञ्जीवयाऽधरसुधानिकरेण राधाम् ॥५

वंशीर्मुकुन्द ! शिशवोऽप्यधुनाऽधिवृन्दम्,
चेद्वादयन्ति मधुरध्वनयस्तदीयाः ।
रोमाञ्चयन्ति चकितेन चलाचलाक्षी-
मानन्दयन्ति मदयन्ति विषादयन्ति ॥६

क्षणमधुना मधुनाशन ! नाशनविधिकौतुकी कुपितः ।
अभिसर तनुजितमन्मथ ! मन्मथ इह तां मुहुर्दहति ॥७

मानं कृष्ण ! विमुञ्च सञ्चर मनाग् वृन्दावनं साम्प्रतम्,
राधानेत्रचकोरिकाऽपि सचमत्कारं समाचामताम् ।
त्वद्वक्त्रेन्दुसुधारसं निपुणया सख्येति सन्देशित-
स्सानन्दो जगतां सदाऽस्तु बहुलानन्दाय नन्दात्मजः ॥८



इति श्रीगीतपीतवसने साऽऽनन्दनन्दात्मजो
नाम चतुर्थसर्गः ॥



# पञ्चमसर्गः



मम निवसतः कुञ्जे सख्ये निवेदय वेदना-
मनुनय सखीङ्गत्वा रामां समानय मा चिरम् ।
इति निगदिता गोविन्देन स्मरातुरचेतसा
मनसिजवलद्बाधां राधां जगाद सखी वचः ॥१

गमय सफलतां वयोऽद्य बाले !
दमय चिरं विरहानलं मुरारेः ।
शमय सुवदने ! मनोऽभिमानं,
रमय मुकुन्दममन्दमम्बुजाक्षि ! ॥२



## गुञ्जरीरागेण गीयते



तरुवरपालीमधिगुणशाली ।
सखि ! विलपति वनमाली ॥
ध्रुवपदम्

सुमधुरपवने रतिपतिभवने सुरभिणि मञ्जुनिकुञ्जे ।
वसति रसालरसाल ( ) विलसदधिकपिकपुञ्जे ॥१

विरचय गमनं रमय च रमणं गमय मनो न विरामम् ।
लोचननलिनं मा कुरु मलिनं नयनजलैरभिरामम् ॥२

तव सखि ! सरलं कलयति तरलं विरचितदिवसविरामम् ।
निधुवनरुचिरं वनमथ सुचिरं सीदति सुदति! निकामम् ॥३

विलपसि विफलं यौवनमफलं मा कुरु तरुणि ! विलम्बम् ।
अभिसर विपिनं हरिरतिनिपुणं गमय हर्षमविलम्बम् ॥४

न वदसि मधुरं कलयसि विधुरं किमिति मनो न विरामम् ।
न नयसि हृदयं हरिमधि सदयं मदनविहितबहुबाधम् ॥५

कुरु हितवचनं परिमितवचनं रचय रचय हृदि हारम् ।
कुवलयनयने ! नवदलशयने रोचय रुचिरविहारम् ॥६

गुरुमभिमानं चिरमनिदानं परिहर विहर सकामम् ।
चल सखि ! चपलं सुखमतिविपुलं कलय कमलमुखि कामम् ॥७



सुललितलताकुञ्जे गुञ्जन् दुनोति मनोऽधुना,
ध्वनयति मधुध्वंशी वंशीमसौ मधुराकृतिः ।

वरतनु ! तव प्रोद्बोधाय त्वरापरमानसो,
रमणिरमणः क्लान्तस्वान्तः कथञ्चन वर्त्तते ॥४

जनय खञ्जनगञ्जनमञ्जनैर्नयनमञ्जय रञ्जय माधवम् ॥
अपि च किञ्चिदुदञ्चितपञ्चमं, सखि ! विपञ्चय मुञ्च रुषं वचः ॥५

सहचरि ! चरमाञ्चगाम काष्ठां,
दिनकर एष न ते नतोऽपि मानः ।
रचयति करुणं रथाङ्गरामा,
सखि ! वचनेऽसि तथाऽपि किन्नु वामा ॥६

ममेयं कल्याणी नयनपथमायास्यति न वा,
निरानन्दं चेतो मनसिजमुदं धास्यति न वा, ॥
चिरं मे राधाया मधुरमधरं[1] पास्यति न वा,
वदन्नेवन्देवः कलयतु मुदं वो मधुरिपुः ॥७



इति श्रीगीतपीतवसने सबाधमाधवो
नाम पञ्चमसर्गः ॥

१. अधरमधुरः पाठस्तु मूले ।

# षष्ठसर्गः



ताञ्चन्तुमलसां राधामाधाय विटपोदरे ।
सादरं सा दरं हित्वा निजगाद रमाधवम् ॥१



## लाटरागेण गीयते



कुवलयनयना सीदति चिरविरचितशयना
। ध्रुवपदम्

कलयति कमलनयन ! तव वदनम् ।
शुचिहिमरुचिरुचिरं सुखसदनम् ॥१

वहति महति विरहे बहुवारम् ।
शुचिहिमरुचिरुचिरं घनसारम् ॥२

रचयति रुचिरनयन ! मणिहारम् ।
त्वयि चिरयति तिरयति सविकारम् ॥३

पथि निदधाति नयनमतिविमलम् ।
तव पदखेदशमनमिह कमलम् ॥४

स्रजमभिनवकुसुमैरपि तनुते ।
तामपि सितभुजगीमिव मनुते ॥५

कलयति सरससरसबिसवलयम् ।
घनवनमिव वृणुते रतिनिलयम् ॥६

विरमति सुरभिरजनिरिति सकला ।
चिरयति भवति विषीदति विकला ॥७

●

स्तिमितनयनमन्तर्मीलितस्वान्तमीष--
न्मुखरितमदनानि स्वान्तरानन्दनानि ।
कुवलयदलदामश्यामलध्यानसिद्ध्याऽ-
नुभवति हरिणाक्षी त्वन्मुखालोकनानि ॥३

ताम्बूलं नवकुङ्कुमं मलयजक्षोदाम्बुसिक्तं चिरा-
दुन्मीलन्नवमालिकाविरचितां मालां विशालामथ ।
तल्पं सा परिकल्प्य तूर्णमधुनाऽनल्पव्यथा मन्दिरे,
सस्मेरस्मरविह्वला वरतनुस्त्वन्मार्गमालोकते ॥४

सरसरासरसेन स नासिकातलमिलन्मुरलीतरलीकृतैः ।
मृगदृशां नयनैरवलोकितो, जयति नन्दनिकेतननन्दनः ॥५

●

इति श्रीगीतपीतवसने समानरमानाथो
नाम षष्ठसर्गः ॥

●

# सप्तमसर्गः



स्फुरत्ताराहारावलिवलितसन्नायकमणिः,
श्रमश्रान्तं कुर्वन् जगदखिलमाखण्डलदिशः ।
तमःस्तोमं सोमः प्रविरलमथोस्रैर्विघटयन्,
मुदा वृन्दारण्यं विमलमिव कर्तुं बहिरभूत् ॥१

वलति विमलरङ्कुश्यामलाङ्कः शुचिश्री—
र्विदलकुमुदवृन्दाऽऽनन्दनोऽमन्दमिन्दुः ।
हरिहरिदबलायाः केशवेशस्समन्ता-
द्वलयित इव दाम्नाऽमन्दकुन्दावलीनाम् ॥२

स्फुरति सुरवराऽऽशासारसास्यालिकेऽसौ,
तिलक इव कलावान् कल्पतश्चन्दनेन ।
असितमृगमिषेणाप्यत्र मध्येऽतिशुद्धे,
मृदुलमृगमदानां बिन्दवोऽमी वसन्ति ॥३

वलति वलभिदाशासुन्दरी कुन्दवृन्द—
प्रतिरचितमिवेन्दुः कन्दुकं सुन्दरश्रीः ।

यदिह मृगमिषेणापीदमापीय मन्दं,
निवसति मकरन्दं वृन्दमिन्दिन्दिराणाम् ॥४

समुदितमथ वीक्ष्य चन्द्रबिम्बं,
सुचिरविलम्बिनि माधवे विषण्णा।
वनमधि विललाप राधिका सा,
शशधरवर्णनमेवमाचरन्ति ॥५



## वसन्तरागेण गीयते



किं करवाणि विधुरा।
विरमति मधुरजनी मधुरा॥
ध्रुवपदम्

दहति विरहदहनो मम देहम्।
सखि ! कलयामि विपिनमिव गेहम् ॥१
वहति मलयमरुदहह !! निकामम्।
बोधयतीव शयितमपि कामम् ॥२
वलति वरुणदिशि शशधरबिम्बम्।
हरिरधुनाऽपि करोति विलम्बम् ॥३
व्यथयति मामयमपि हिमधामा।
रमयति हरिमिह काऽपि सकामा ॥४

स्मरति न मामपि वत वनमाली।
जीवति न खलु कुसुमशरशाली ॥५

कमपि विहितमति गुरु किमु पापम्।
प्रियदर्शनमपि येन दुरापम् ॥६

किमिह वृथा विलपामि सखेदम्।
जीवनमपि वरमिह न ममेदम् ॥७



वासन्ती रजनी वनी कुसुमिता धीरः समीरः पुनः,
कालिन्दीजलबिन्दुतुन्दिलतमो मन्दं समुन्मीलति।
एतेनाऽपि स केशवो यदि समायातो न केलीगृहम्,
तन्मन्ये मदनो मृतोऽस्ति यदि वा नायंऽधुनीते धनुः ॥७

आगतामथ वीक्ष्यैषा विषादविमुखीं सखीम्।
आशङ्क्य रमितं कृष्णं कयाऽपीदमुवाच सा ॥८

विहरति हरिणा सहैव काऽपि,
स्मरसमरोचितवेशपेशलाऽन्या।
मखरितरसनाऽऽवली सलीलं,
हरिपरिरम्भणसम्भृताऽऽत्मजन्मा ॥९

मुकुन्दः कालिन्दीतटनिकटवाटीपरिसरे,
सरोजाक्षी वक्षोरुहि मदनलेखां विलिखति।
सलीलं कस्तुरीसुललितमसीभिस्सपुलकं,
ललाटे पत्रालीं मृगमदविचित्रां रचयति ॥१०

परिहर सखि ! मूकतामयञ्च,
त्वदनुनयादपि नाऽऽगतो मुकुन्दः ।
तदिह तमनुनेतुमद्य सद्यः,
स्वयमपि हन्त !! ममासवः प्रयान्तु ॥११



## देशाषरागेण गीयते



सखि ! सह विहरति नवकविना ।
ध्रुवपदम्

चकितचमूरुरुचिरवदना ।
विरचितबिसकिशलयशयना ॥१

विदलितविमलकमलवदना ।
हरिपरिरम्भवलितमदना ॥२

घनतरतरलवलितवसना ।
शिथिलितनीविगलितवसना ॥३

कोमलविमलपीनजघना ।
विलसिततनुजितसजलघना ॥४

अरुणनलिनसमकरचरणा ।
आलिङ्गितधृतरथचरणा ॥५

विशदशिखरसमरुचिरदना ।
चुम्बितनन्दतनयवदना ॥६

कृतककलहकलुषितहृदया ।
पदयावकभृतहरिहृदया ॥७

•

मार ! मारय न मां शिलीमुखै--
र्माधवोऽस्ति हृदयेऽथ सारय ।
तं निधाय हृदि यामि संक्षयं,
यद्भवामि पुनरस्य वल्लभा ॥१३

उत्पत्तिर्मलये बभूव भवतः पाटीरवाटीतटे,
क्रीडा साधुमधुः सखा सहचरी गङ्गातरङ्गावली ।
सर्वं शीतलमेव ते सहजतो जातं वसन्ताऽनिलः ।
त्वं वह्नेरपि दारुणा कथमहो !! धिग्दैववच्चेष्टितम् ॥१४

राधिकाहृद्यतरहारविहार ( ) भाक् ।
सरोजास्यस्स नो देयादानन्दं नन्दनन्दनः ॥१५

•

इति श्रीगीतपीतवसने सोत्कण्ठवैकुण्ठो
नाम सप्तमसर्गः ॥

•

# अष्टमसर्गः



समागतं प्रातरथ[1] प्रकुप्ता, मनोजबाणव्रणविह्वलाक्षी ।
तं सामवाचाऽनुनयन्तमग्रे, जगाद नीलाम्बुदसन्निभं सा ॥१



## भैरवीरागेण गीयते



मा कुरु केशव ! कैतवमवगतमिव तव वञ्चनशीलम् ।
तामनुनय कुवलयनयनामिह रमयसि यामनिमीलम् ॥
ध्रुवपदम्

रजनिरजनि वितता रतिरभसरसेन कितव ! तव कामम् ।
मामथ वञ्चयसीह किमिति कुलिशोपमहृदय ! निकामम् ॥१

कुङ्कुमकलितललितकुचसङ्गतिसङ्गतशोणिमरूपम् ।
तुलयति निर्दय ! हृदयमिदं तव नवघनगतचिररूपम् ॥२

चरणगलितनवयावकवलितमिदं वपुरधिकमुदारम् ।
कलयति तव कुरविन्दकरम्बितकज्जलशैलनिकारम् ॥३

---

१. प्रातरित्युचितः ।

वलति च भवदधरे मधुसूदन ! रदपदमिदमतिनीलम् ।
अभिनवविभ्रमशकलवलितमिव विमलपुरन्दरनीलम् ॥४

कथयति नखपदमुरसि ललितमिदमिह तव सुरतचरित्रम् ।
मामथ विविधवचनरचनैरनुनयसि सुचिरमिति चित्रम् ॥५

अति मधुरं वचनं तव माधव ! हृदयमदयमतिवामम् ।
कथमथ विनिहतवानसि किल निजमातुलमहह !! निकामम् ॥६

भ्रमवचननैरपि निगदसि नाम तदीयमहह !! कमनीयम् ।
ह्रीरपि हृदि न भवति तव केशव ! कैतवमतिरमणीयम् ॥७

●

प्रियापादालक्तैः कितव ! तव रक्तीकृतमिह,
स्फुटं वक्षो विक्षोभितमिव मनो नेत्रमरुणम् ।
तथाऽपि श्रीजाने ! वचनरचनैर्वञ्चयसि मा-
महो !! धन्यः कोऽयं विलसति वधूवञ्चनविधिः ॥३

राधे ! मा धेहि चित्ते रुषमति परुषं वाचिकं मुञ्च कान्ते !
दृक्प्रान्तेनाऽपि मान्ते चरणनिपतितं पश्य चण्डि ! प्रसीद !
यज्जातं तद्धि जातं पुनरपि भविता नेदृशं कर्म शर्म,
श्रीकृष्णः संविदध्यादनुनयवचनान्येवमाभाषमाणः ॥४

●

इति श्रीगीतपीतवसने विलक्षलक्ष्मीपति-
र्नामाऽष्टमसर्गः

# नवमसर्गः

•

तामथ विरहविखिन्नां,मनसिजविशिखैरहर्न्निशं विभिन्नाम् ।
परिचिन्तितहरिचरितां, सुललितचरितां जगाद सखी ॥१

•

## गुञ्जरीरागेण गीयते

•

राधिके ! विहर सुरतसुखसाधिके !
ध्रुवपदम्

कलय कमलमुखि ! रुषिरविरामम् ।
करुणमुरीकुरु तरुणि ! निकामम् ॥१

विमलकमलदलकोमलशयने ।
मधुरिपुमनुसर सरसिजनयने ! ॥२

निगदसि किमिति वचनमति परुषम् ।
किमिह करोषि दयितमति सरुषम् ॥३

किमिति युवति ! बहु विलपसि विफलम् ।
यौवनमिदमिह कुरु सखि ! सफलम् ॥४

जनय मनागपि नयनविकासम् ।
हरिमधि सुदति ! घटय भुजपाशम् ॥५

विरचय विधुमुखि ! सुललितहासम् ।
कुरु हरिणा सह सरसविलासम् ॥६



अत्रैव नैव कति सन्ति नवीननेत्रा-
स्तत्रारविन्दनयने रतिसाऽभिलाषाः ।
तत्किं विचारयसि कोपिनि ! गोपकन्ये !
धन्याऽसि यत्पुनरसौ त्वयि सानुरागः ॥३

राधे ! विधेहि परिरम्भणमेष वामः,
कामः कृतान्त इव मां कवलीकरोति ।
तन्वि ! प्रसीद तदिहैति चिरं मुरारिः,
श्रीराधिकामनुनयन् मुदमातनोतु ॥४



इति श्रीगीतपीतवसने साऽनुनयनन्दतनयो
नाम नवमसर्गः ॥

# दशमसर्गः



विषाद (        ) श्रीराधां मुदैत्यथ रमाधवः ।
प्रदोषे प्राह सव्रीडमिदं सुमधुरं वचः ॥१

ह्रीणा वीणा भवतु दयिते ! मामकीना नवीना,
मूकीभावं भजतु च शुकी कोकिला व्याकुलाऽस्तु ।
वीची नीचीभवतु च सुधावारिधेः किञ्च वाचो—
वीचीर्बाले ! विरचय चिरं चारुचामीकराङ्गि !॥२

समीरोऽयं धीरो मलयनिलयस्तन्वि ! हृदये,
विसर्पत्कन्दर्पज्वलनमविलम्बं ज्वलयति ।
अतो वीणात्राणि ! स्नपय कृपया मां निजवचः—
सुधाधाराऽऽसारैस्तमपि परिनिर्वापय चिरात् ॥३

इत्यच्युतस्तामनुनीय राधिकां,
विवेश केलीशयनं रसाऽधिकाम् ।
ह्रिया विनम्रीकृतबन्धुराऽऽननां,
वनान्तरे काऽपि जगाद तां पुनः ॥४

वासन्ती रजनी चकास्ति वलते राकानिशानायको,
मन्दं मन्दमुपैति चन्दनवनीरन्ता वसन्तानिलः।
तत् किं कोपिनि ! गोपयस्यविरतं लोभोदयं लज्जया,
सार्द्धं श्रीमधुवैरिणा निधुवनारम्भः समुज्जृम्भताम् ॥५

स्फुटवचनमिदं निशम्य सम्यक्,
चतुरसखीचरितं विचारयन्ती।
शयनमधिजगाम कामबाण-
[1]प्रहितमना नयनाऽभिरामनेत्रा ॥६

अथ मनोजमनोरथलुब्धयोर्मुदितयोर्युवतीयदुनाथयोः।
अधितमिस्रमजस्रमभूत्तदा, निधुवनं मधुरे विपिनाऽन्तरे ॥७

काञ्चीदामरसाद्विराममगमन्निःश्वासकोष्णं मुखं,
निष्पन्दं नयनं च्युता विरचिताः कस्तूरिकापत्रिकाः।
कान्ता प्रीतिमवाप कामपि तथाप्याहो ! ! रहोरम्भिता,
वामानां किल कामकुञ्चितधियां वामैव रीतिः परम् ॥८

रतिक्लान्तं ततः कान्तं सा विभूषणवाञ्छया।
राधा स्वाधीनपतिका जगादाऽम्बुदसुन्दरम् ॥९



## वामकरीरागेण गीयते



तमुवाच सा रतिमन्दिरे, विलसति नवघनसुन्दरे।
ध्रुवपदम्

१. प्रसङ्गदृष्ट्या प्रहृतमनाः समीचीनः।

पटुतरचटुलपटीररसैरनुरञ्जय मम कुचमण्डलम् ।
श्रुतिमण्डलमधिमण्डनमुपनय कनकघटितनवकुण्डलम् ॥१

श्रमविगलितजलविलुलितकज्जलममलकमलदलगञ्जनम् ।
युवजनरञ्जनमञ्जनकैरनुरञ्जय लोचनखञ्जनम् ॥२

घनचयचारुनिकरसमघनमदनध्वजचामरम् ।
रचय विकचविचकिलचयचम्पकरुचिरमचिरमतिडामरम् ॥३

मम सदये हृदये हृदयेशय ! पाशविलासविधायकम् ।
कुरु मुरलीधर ! हारमधिकरुचिरं गलमङ्गलदायकम् ॥४

निधुवनजनितपरिश्रमसलिलमतिललितमुरोभवम् ।
विमलकरेण हरे ! परिशोधय बोधय शयितमनोभवम् ॥५

मम नसि रसिकमनसि सुखजनककनककलितं कुरु भूषणम् ।
विदलिततिलकलिकामुकुलितमिव चम्पकमुकुलमदूषणम् ॥६



हारं हारि समर्पयोरसि नसि स्वर्णस्य मुद्रां श्रुतौ,
ताटङ्कं पटुहाटकं स्तनतटे कस्तूरिकापत्रिकाः ।
काञ्चीः किञ्च नवीनपीनजघनाऽऽलम्बे नितम्बे मम,
श्रीपीताम्बरसम्बराऽरिनृपतेर्वीणा नवीना इव ॥७

इति निगदितवत्यां केलिकुञ्जे युवत्यां,
निजरुचिजितवत्यां वाञ्छया भूषणानाम् ।
वपुषि विशदभूषां सादरं राधिकाया,-
र्लघुविनिहितपाणिश्चक्रपाणिश्चकार ॥१२

एकस्मिन् शयने विशाय्र स्वपतोर्व्याजादरं रुष्टयो-
र्व्याजान्मीलितनेत्रयोर्मधुवने राधामधुद्वेषिणोः ।
अन्योन्याऽनुनयेच्छया विदधतोर्लोभस्य सङ्गोपनं,
रात्रौ जागरणव्रतं शिवशिव श्रेयांसि देयान्मम ॥१३

नाऽऽस्ते वाचि विदग्धता यदिह मे काव्ये न भव्या गिरो,
न शृङ्गाररसस्य वा चतुरता रीतिर्नवाऽऽस्ते नवा ।
श्रीगोविन्दपदारविन्दयुगलध्यानावनद्धात्मन-
स्तत्सर्वं हि ममापराधमधुना शुद्धाः क्षमध्वं बुधाः ! ॥१४

माता यस्य धराधरेन्द्रतनयातुल्याऽन्नपूर्णा कृती,
तातो यस्य महाशयो दशरथो निष्ठावशिष्ठाऽधिकः ।
राधामाधवकेलिकौशलकथां कान्तां कवीनां मुदे,
काव्यं भव्यमिदं चकार स नवं श्रीश्यामरामः कविः ॥१५

शृङ्गारसारतरमारकथासमेतं श्रीमन्मुकुन्दचरणस्मरणानुबन्धि ।
श्रीश्यामरामरचितं मुखभूषणाय,श्रीगीतपीतवसनं सुधियां सदास्तु ॥१६

इति गीतपीतवसने प्रमुदितमाधवो
नाम दशमसर्गः
समाप्तः ॥

॥ॐ श्रीरस्तु ॥

# पद्यानामकाराद्यनुक्रमणिका

●

# समागतवृत्तलक्षणानि

अनुष्टुप्— श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥
४/१। ६/१,८, १५। १०/१,६।

आर्या— यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥
४/७। ६/१।

वसन्ततिलका— उक्ता वसन्ततिलका तभजा जगौ गः ।
१/२,४। ३/१। ४/५,६। ६/३-४। १०/१६

मन्दाक्रान्ता— मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गयुग्मम् ।
१/१४। २/२। ३/३,६-७। १०/२

शिखरिणी— रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ।
१/५-६। ३/४। ५/७। ७/१,१०। ८/३। १०३।

शार्दूलविक्रीडितम्— सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ।
१/१०,१६। २/३,५। ४/८। ६/४। ७/७,१४। १०/५,८,६,११-१३।

पृथ्वी— जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।
१/१,७। ४/२

मालिनी— ननमयययुतेयं मालिनी भोगलोकैः ।
१/१५। ६/३। ७/२-४। १०/१२

रथोद्धता— रान्नराविह रथोद्धता लगौ ।
१/३। ३/५

द्रुतविलम्बितम्	द्रुतविलम्बितमाह नभौ भरौ।
१/८। ३/१। ६/५। ९/७

पुष्पिताग्रा— अयुजि न युग रेफतो यकारो।
युजि च नजौ जरगाश्च पुष्पिताग्रा॥
१/९ ११,१२,१३। १३। ५/२,५। ७/५,११

हरिणी— नसमरसलागः षड्वेदैर्हयैर्हरिणी मता
२/१। ५/१,४

स्रग्धरा— म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।
८/४

इन्द्रवंशा— तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ।
८/१

वंशस्थविल— वदन्ति वंशस्थविलं जतौ जरौ।
१०/४

नर्दटकम्— यदि भवतो नजौ भजजला गुरु नर्दटकम्।
२/४

# समागतरागाणां सूची